३४४ जिवँ जिवँ वंकिम लोअणहं, णिरु सामलि सिक्खेइ ।
तिवँ तिवँ वम्महु निअय-सर, खर-पत्थरि तिक्खेइ ॥२१॥

यथा यथा श्यामला स्त्री लोचनानां निश्चितं वक्रत्वं शिक्षते, तथा तथा मन्मथो निजशरान् खरप्रस्तरे कठोरपाषाणे तीक्ष्णान् करोतीत्यर्थः ॥२१॥

३४५ सगर-सएहिं जु वण्णिअइ, देक्खु अम्हारा कन्तु ।
अइमत्तह चत्तङ्कुसहं, गय कुम्भइं दारन्तु ॥२२॥

हे सखीति गम्यते, तं मदीयं कान्तं पश्य, यः सङ्ग्रामशतेषु वर्ण्यते, अतिमत्तानां त्यक्ताकुङशानां गजानां कुम्भान् दारयन्तमित्यर्थः ॥ २२ ॥

३४६ तरुणहो तरुणिहो मुणिउ मइं करहु म अप्पहो घाउ ॥

तरुणहो हे तरुणा, 'तरुणिहो' हे तरुण्यः ! ज्ञात्वा मा आत्मनो घात मा कुरुत ॥

३४७ गुणहिं न संपइ कित्ति पर० ।

'गुणहिं इति' पूर्ववत् (दो० १० ) ॥

३४७ भाईरहि जिवँ भारइ मग्गेहि तिहिंवि पयट्टइ ।

'भाईरहि' भागीरथी 'जिवँ' यथा 'भारइ' भरतस्येयमिति भारती, 'तिहिंवि' त्रिष्वेव मार्गेषु प्रवर्तते ॥

३४८ अंगुलिउ जज्जरिआउ नहेण० ।

'अगुलिउ जज्ज०' इति पूर्ववत् ( दो० ८ ) ।

३४८ सुन्दर-सव्वङ्गाउ विलासिणीओ पेच्छन्ताण ।

सुन्दर सर्व अङ्गं यासा ताः सुन्दरसर्वाङ्गा विलासिन्यः स्त्रियः [ताः] पश्यतां पुरुषाणाम् ।

३४९ निअ-मुह-करहिंवि मुद्ध कर, अन्धारइ पडिपेक्खइ ।
ससि-मंडल-चंदिमए पुणु, काइं न दूरे देक्खइ ॥२३॥

काचित्मुग्धा स्त्री निजमुखकरैः-निजमुखकिरणैरन्धकारे 'कर' हस्तं प्रतिप्रेक्षते-पश्यति । शशिमण्डलचन्द्रिकया पूर्णशशाङ्कमण्डलकान्त्या दूरे दूरस्थे पदार्थे पुनः किं न पश्यति, अपि तु पश्यत्येव ।। २३ ।।

३४९ जहिं मरगय-कन्तिए संवलिअं ।।

'जहिं' यथा 'मरगयकन्तिए' मरकतरत्नकान्त्या 'संवलियं मिश्रितम् ।।

३५० तुच्छ-मज्झहे तुच्छ जम्पिरहे ।

तुच्छच्छ-रोमावलिहे तुच्छ-राय तुच्छयर-हासहे
पिय-वयणु अलहन्तिअहे
तुच्छकाय-वम्मह-निवासहे ।। २४ ।।

अन्नु जु तुच्छउं तहे धणहे, तं अक्खणह न जाइ ।
कटरि थणंतरु मुद्धडहे, जे मणु विच्चि ण माइ ।।२५।। (युग्मम्)

'तुच्छरागेति' नायकस्य दूतीकृतामन्त्रणं, हे तुच्छराग ! स्वल्पो रागः स्नेहो यस्य नायकस्य स तथा, तस्या नायिकायाः अन्यद्यत्तुच्छं तदाख्यातु न याति, नायिकायाः किंभूतायाः ? तुच्छमध्यायाः, पुनः किं भूतायाः ? तुच्छजल्पनशीलायाः, पुनः किं भूतायाः ? तुच्छाच्छरोमावल्याः, पुनः किं भूतायाः ? तुच्छतरहासायाः, पुनः किं भूतायाः ? प्रियवचनमलभमानायाः, पुनः किं भूतायाः ? तुच्छकायमन्मथनिवासायाः तुच्छकाये मन्मथनिवासो यस्याः सा, तुच्छकायत्वं भर्त्तुर्विरहात्, 'कटरि'-इत्याश्चर्ये येन कारणेन 'मुद्धडहे' मुग्धायाः स्तनान्तरं मनोवर्त्मनि न माति, स्तनयोरतिपीनत्वात्, अन्तरस्यातितुच्छत्वं वर्णितमित्यर्थः ।।२४।। ।। २५ ।। युग्मम् ।।

३५० फोडेन्ति जे हियडउं अप्पणउं, ताहं पराई कवण घण ।
रक्खेज्जहु लोअहो अप्पणा, बालहे जाया विसम थण ॥२६॥[1]

यौ स्तनौ आत्मीयं हृदय स्फोटयतः, तयोः परकीया घृणा-दया का स्यात् । हे लोकाः ! आत्मान रक्षत; यतः कारणात् वालायाः विपमौ स्तनौ जातौस्त इत्यर्थः ॥ २६ ॥

३५१ भल्ला हुआ जु मारिआ, बहिणि महारा कन्तु ।
लज्जेज्जं तु वयंसिअहु, जइ भग्गा घरु एन्तु ॥ २७ ॥

हे भगिनि ! इदं भव्यं भूतं, यन्मदीयः कान्तो मारितः । यदि भग्नो गृहमैष्यत् तर्हि वयस्याभ्यो वयस्यानां वा-सखीभ्यः सखीनां मध्ये मा लज्जां प्राप्स्यमित्यर्थः ॥ २७ ॥

३५२ वायसु उड्डावन्तिअए, पिउ दिट्ठउ सहसत्ति ।
अद्धावलया महिहि गय, अद्धा फुट्ट तडत्ति ॥ २८ ॥[2]

वायसं-काकमुड्डाययन्त्या कयाचित् स्त्रिया सहसत्ति प्रियो दृष्टः, इति हेतोः 'अद्धा' इति अर्द्ध वलयानामस्या पृथिव्यां गतं; अर्द्ध स्फुट्टं, कथं तडत् इति यथा स्यात् । एतावता अर्द्ध त्रुटित्वा भूमौ पतितं, अर्द्धानि वलयानि त्रटदिति कृत्वा स्फुटितानि इत्यर्थः ॥ २८ ॥

---

१. स्वकीय उदर भित्त्वा निर्गतौ च पयोधरौ ।
परकीय-शरीरस्य भेदने का कृपालुता ॥
सुभाषितरत्नभाण्डागारे पृ. २५६ श्लोक २६४

२. काग उडावण घण खडी, आया पीव भडक्क ।
आधी चुडी काग गल, आधी गइ तडक्क ॥
राजस्थानी दोहा

३५३ कमलइं मेल्लवि अलि-उलइं करि-गण्डाइं महन्ति ।
असुलहमेच्छण जाहं भलि, ते णवि दूर गणन्ति ।। २९ ।।

अलिकुलानि कमलानि मुक्त्वा करिगण्डानि काङक्षन्ति। येषामसुलभ–दुर्लभमिषितुं 'भलि' कदाग्रहो भवति ते दूरे नापि गणयन्तीत्यर्थः ।। २९ ।।

३५४ अन्नु जु तुच्छउं तहे धणहे० (दो० २५ ) ।

'तहे' तस्याः 'धणहे' स्त्रिय अन्यत् 'जु' यत् 'तुच्छउं' तुच्छक अस्ति ।।

३५४ भग्गउं देक्खिवि निअय बलु, बलु पसरिअउं परस्सु ।
उम्मिल्लइ ससि-रेह जिवँ, करि करवालु पियस्सु ।। ३० ।।

'भग्गउ' हे सखीति गम्यते, यथा द्वितीयादितिथौ शशिरेखा चन्द्ररेखा प्रकटी भवति, तथा प्रियस्य करे हस्ते करवालः खड्ग 'उम्मिल्लइ' शोभते । किं कृत्वा ? दृष्ट्वा निजबल निजसैन्य भग्नक, पुन. परस्य शत्रोः 'बलु' सैन्यं प्रसृतक विस्तृतकमित्यर्थ. ।

३५५ जहां होन्तउ आगदो । तहां होन्तउ आगदो ।
कहां होन्तउ आगदो ।

'जहां' यस्मात् 'होन्तउ' भवन् 'आगदो' आगतः । 'तहा' तस्मात् भवन् आगतः । 'कहां' कस्मात् भवन् आगतः ।

३५६ जइ तहो तुट्टउ नेहडा, मइ सहु नवि तिल-तार ।
त किहे वङ्केहि लोअणेहिं, जोइज्जउं सय–वार ।। ३१ ।।

हे तिलतार ! तिलवत्स्निग्धा तारा–कनिनिका यस्य स, तस्य सम्बोधनम्, यदि तव स्नेहो मया सह नापि त्रुटितः, तत् तस्मादहं त्वया वक्राभ्यां लोचनाभ्यां शतवारं विलोक्यत इत्यर्थः ।।३१।।

३५७ जहिं कप्पिज्जइ सरिण सरु, छिज्जइ खग्गिण खग्गु ।
तहिं तेहइ भड-घड-निवहि, कन्तु पयासइ मग्गु ॥३५॥

यस्मिन् 'कप्पिज्जइ' कर्त्यते शरेण-वाणेन शरो-वाण:, यस्मिन् खड्गेन खड्ग. छिद्यते, 'तहिं' तस्मिन् सङ्ग्रामे 'तेहइ'-तादृशे स्थाने 'भडघडनिवहि' भटानां सुभटाना या घटास्तासां निवहे, अथवा भटलक्षणे घडनिवहि वृक्षमूलसमूहे (?) कान्तो मार्गं प्रकाशयतीत्यर्थः ॥ ३२ ॥

३५७ एक्कहिं अक्खिहिं सावणु, अन्नहिं भद्दवउ ।
माहउ महिअल-सत्थरि, गण्ड-त्थले सरउ ॥३३॥
अङ्गिहिं गिम्ह सुहच्छी-तिलवणि मग्गसिरु ।
तहे मुद्धहे मुह-पङ्कइ, आवासिउ सिसिरु ॥३४॥[1] (युग्मम्)॥

तस्या मुग्धाया एकस्मिन्नक्षिणि श्रावण:, अन्यस्मिन्नक्षिणि भाद्रपद:, को भाव: ? यथा एतौ द्वौ मासौ स्राविणौ तथाऽक्षिद्वयमपि अश्रुजलस्रावित्वात् मासद्वयतुल्यम् । महीतलस्रस्तरे भूतलसंस्तारके माधवो वसन्त: पल्लवमयत्वात् । गण्डस्थले शरत्, तस्या: काशकुसुमादिना पाण्डुत्वात् । अङ्गेषु ग्रीष्म:, तापबाहुल्यात्, सुखासिका 'तिलवने सुखासिका सुखावस्थानं सा एव तिलवनं तस्मिन् मार्गशीर्ष', मार्गशीर्षे तिलवनानामुच्छेद. स्यात् तथा सुखावस्थानस्योच्छेद: । मुखपङ्कजे शिशिर आवासित:, यथा शिशिरे पङ्कजानां म्लानत्वं यथा मुखपङ्कजस्यापि । स्त्रीणां हि वियोगावस्थायामेतानि चिह्नानि स्यु: तेनेत्युक्तम् ॥ ३३ ॥ ३४ ॥ युग्मम् ॥

३५७ हिअडा फुट्टि तडत्ति करि, कालक्खेवे काइं ।
देक्खउं हय-विहि कहिं, ठवइ पइं विणु दुक्ख-सयाइं ॥३५॥

---

1 सरस्वतीकण्ठाभिरणे अय दोवक. वर्तते, २।७६॥

'हिअडा' हे हृदय ! त्रटदिति कृत्वा स्फुट, कालक्षेपेन–कालविलम्बेन किम् । पश्यामि, हतविधिः 'पइं विणु' मया विना दुःखशतानि कुत्र स्थापयतीत्यर्थः ।।३५।।

३५८ कन्तु महारउ हलि सहिए, निच्छइं रूसइ जासु !
अत्थिहिं सत्थिहि हत्थिहि वि, ठाउवि फेडइ तासु ।। ३६ ।।

हे हले हे सखि ! मदीयः कान्तो निश्चयेन यस्य रुष्यति तस्य स्थानकं स्फेटयति, कैः ? अर्थैः–द्रव्यैः शस्त्रैः, हस्तैरपि ।। ३६ ।।

३५८ जीविउ कासु न वल्लहउं धणु पुणु कासु न इट्ठु ।
दोण्णिवि अवसर-निवडिअइ तिण-सम गणइ विसिट्ठु ।।३७।।

'जीविउ' जीवितं कस्य वल्लभं न स्यात्, धनं पुनः कस्येष्ट न स्यात्, विशिष्टो मनुजोऽवसरे पतिते द्वेऽपि जीवितधने तृणसमे गणयति ।।३७।।

३५९ जहे केरउ, तहे केरउ, कहे केरउ ।

'जहे' यस्याः 'केरउ' सम्बन्धी । 'तहे' तस्याः 'केरउ' सम्बन्धी । 'कहे' कस्याः 'केरउ' सम्बन्धी ।।

३६० प्रङ्गणि चिट्ठदि नाहु ध्रु त्रं रणि करदि न भ्रन्त्रि ।।

'प्रङ्गणि' प्राङ्गणे गृहाङ्गणे 'ध्रु' यः 'नाहु' नाथः तिष्ठति, 'त्र' सः 'रणि' रणे, सग्रामे 'करदि' करोति युद्धादि, 'नभ्रन्त्रि' भ्रान्तिर्नास्ति ।

तं बोल्लिअइ जु निव्वहइ ।

'त' तद् 'बोल्लिअइ' कथ्यते, 'जु' यत् 'निव्वहइ' निर्वाह्यते ।।

३६१ इमु कुलु तुह तणउं ।
इमु कुलु देक्खु ।

'इमु' इदं कुलं 'तुह' तव 'तणउ' सम्बन्धि ।
'इमु' इदं कुलं पश्य ॥

३६२ एह कुमारी एहो नरु, एहु मणोरह-ठाणु ।
एहउ वढ चिन्तन्ताहं, पच्छइ होइ विहाणु ॥ ३८ ॥

'एह' एषा कुमारी, 'एहो' एष., अह नर', एतन्मनोरथस्थानम्, 'एहउ' ( एतद् ) ईदृशं चिन्तयतां 'वढ' मूर्खाणां पश्चाद्विभातं–प्रभातं भवति ॥ ३८ ॥

३६३ एइ ति घोडा एह थलि ॥ एइ पेच्छ ॥

'एइत्ति' (दोहा) पूर्ववत् ॥ एइ-एतान् पश्येत्यर्थः ॥

३६४ जइ पुच्छह घर वड्डाइं, तो वड्डा घर ओइ ।
विहलिअ-जण-अब्भुद्धरणु, कन्तु कुडीरइ जोइ ॥३९॥[1]

काचित् स्त्री पथिकं प्रत्याह,-यदि वृहन्ति गृहाणि पृच्छत, ततो वृहन्ति 'ओइ' अमूनि–प्रत्यक्षोपलभ्यमानानि गृहाणि वर्त्तन्ते। अथवा दानाद्यभिलाषीति शेष ,तदा कुटीरके विहलितजनाभ्युद्धरण[2] कान्त पश्येत्यर्थः ॥३९॥

३६५ आयइं लोअहो लोअणइ, जाई सरइ न भन्ति ।
अप्पिए दिट्ठइ मउलिअहिं, पिए दिट्ठइ विहसन्ति ॥४०॥[3]

लोकस्येमानि लोचनानि जातिं स्मरन्ति न भ्रान्तिः न सन्देहः । अप्रिये दृष्टे सति 'मउलिअहिं' मुकुलितन्ति-मुकुलितानीवाचरन्तीत्यर्थः । प्रिये दृष्टे सति विकसन्ति ॥४०॥

---

१. विहलुद्धरण-सहावा हुवति जइ के वि सप्पुरिसा ।
गाथासप्तशत्याम् ३-८५

२. विह्वलिताश्च ते जनाश्च विह्वलितजनास्तान् अभ्युद्धरतीति विह्वलितजनाभ्युद्धरणस्तम् ॥

३. अइपसण्णु मुहु होइ, सभासणु पडिवज्जइ ।
पुव्व-भवतर-णेहु, जण-दिट्ठिए जाणिज्जइ ॥
महापुराणे ६।५।१३-१४

३६५ सोसउ म सोसउ च्चिअ, उअही वडवानलस्स किं तेण ।
जं जलइ जले जलणो, आएण वि किं न पज्जत्त ॥४१॥

'च्चिअ' निश्चयेन उदधिः शुष्यतु मा शुष्यतु वा, तेन-समुद्रशोषणेन समुद्राशोषणेन वा वडवानलस्य किं ? यदिति-क्रियाविशेषणम्, यत् जले ज्वलनो ज्वलति, अनेन जलज्वलनेन तस्य वडवानलस्य किं न पर्याप्तम् ? किं न सृतम्, अपि तु सर्वमेवेत्यर्थः ॥ ४१ ॥

३६५ आयहो दड्ढ-कलेवरहो, जं वाहिउ तं सारु ।
जइ उट्ठब्भइ तो कुहइ, अह डज्झइ तो छारु ॥४२॥[1]

'आयहो' अस्य दग्धकलेवरस्य यद्वाहितं तदेव सारम् । मरणानन्तर त्विति शेषः, यदि आच्छाद्यते स्थाप्यते तदा कुथ्यति, अथ दह्यते तदा क्षारो-भस्म स्यात् ॥४२॥

३६६ साहु वि लोउ तडप्फडइ, वड्डुत्तणहो तणेण ।
वड्डुप्पणु पर पाविअइ, हत्थें मोक्कलडेंण ॥ ४३ ॥[2]

'साहुवि' सर्वोऽपि लोकः 'तडप्फडइ' उत्सुकी भवति आकुलीभवति । किमर्थं ? बृहत्त्वस्यार्थम् । परं 'वड्डुप्पणु' बृहत्त्वं हस्तेन मुत्कलेन प्राप्यते इत्यर्थः । को भावः ? जनैर्महत्वं तदा प्राप्यते चेद्दानादिगुणाः स्युरित्यर्थः ॥४३॥

---

१. बलि किउ माणुसजम्मडा देक्खतह पर सारु ।
जइ उट्ठब्भइ तो कुहइ अह डज्झइ तो छारु ॥

परमात्मप्रकाशे २-१४७

२. सयलु वि को वि तडप्फडइ सिद्धत्तणहु तणेण ।
सिद्धत्तणु परिपाविअइ चित्तह णिम्मलएण ॥

दोहापाहुडे दोहा ८८

३६७ जइ न सु आवइ दूइ घरु, काइं अहो-मुहु तुज्झु ।
वयणु जु खण्डइ तउ सहिए, सो पिउ होइ न मज्झु ।।४४।।[1]

हे दूति ! स यदि गृहं न 'आवइ' आगच्छति, तर्हि तवाधोमुखं किम् ? । हे सखि ! यस्तव वचन खण्डयति स मम प्रियो न भवति इत्यर्थः ।। ४४ ।।

३६७ काइं न दूरे देक्खइ ।।

'काइ' किं न दूरे पश्यति ।।

३६७ फोडिन्ति जे हिअडउ अप्पडउ, ताहं पराई कवण घण ।
रक्खेज्जहु लोअहो अप्पणा, बालहे जाया विसम थण ।।४५।।

व्याख्या ( दो० ) पूर्ववत् ।

३६७ सुपुरिस कंगुहे अणुहरहिं, भण कज्जे कवणेण ।
जिवँ जिवँ वड्डतणु लहहिं, तिवँ तिवँ नवहिं सिरेण ।।४६।।

सुपुरुषाः कङ्गोः–धान्यविशेषस्य अनुहरन्ते–सदृशा भवन्ति, भण कथय केन कार्येण ? । उच्यते, यथा यथा बृहत्त्वं लभन्ते, तथा तथा शिरसा नमन्तीत्यर्थः ।। ४६ ।।

३६७ जइ ससणेही तो मुइअ, अह जीवइ निन्नेह ।
बिहिवि पयारेंहिं गइअ धण, किं गज्जहि खल मेह ।।४७।।[2]

कस्याश्चिद् भर्त्ता देशान्तरं गतोऽस्ति स मेघं प्रत्याह,– सा स्त्री यदि सस्नेहा भविष्यति तदा मृता भविष्यति, मम

---

१. जइ सो न एइ गेह, ता दूइ अहोमुही तुम कीस ।
सो होही मज्झ पिओ, जो तुज्झ न खडए वयण ।।

वज्जालग्गे ४१७

२. किं गतेन यदि सा न जीवति, प्राणिति प्रियतमा तथापि किम् ।
इति वीक्ष्य नव मेघमालिका, न प्रयाति पथिकः स्वमन्दिरम् ।।

भर्तृहरि विरचिते शृङ्गारशतके ६७

विरहात् । अथ जीवति तर्हि निःस्नेहा । द्वाभ्यां सस्नेह-निःस्नेहलक्षणप्रकाराभ्यां प्रिया गतिका गता, तर्हि हे खलमेघ ! दुर्जन मेघ ! त्वं किं गर्जसि इत्यर्थः ।। ४७ ।।

३६८ भमरु म रुणझुणि रण्णडइ, सा दिसि जोइ म रोइ ।
सा मालइ देसन्तरिअ, जसु तुहुं मरहि विओइ ।। ४८ ।।[1]

हे भ्रमर ! त्वमरण्ये म रुणझुणि-शब्द मा कुरु, तां दिशं विलोक्य मा रुदिहि, पुनः सा मालती देशान्तरिता, यस्या वियोगे त्वं म्रियसे इत्यर्थः ।। ४८ ।।

३६९ तुम्हे तुम्हइं जाणह ।। तुम्हे तुम्हइं पेच्छइ ।

'तुम्हे' यूयं जानीत । युष्मान् पश्यतु ।

३७० पइं मुक्काहं विवरतरु, फिट्टइ पत्तत्तण न पत्ताणं ।
तुह पुणु छाया जइ होज्ज, कहवि ता तेहि पत्तेहि ।।४९।।

'पइं' त्वया 'मुक्काहं' मुक्तानां 'विवरतरु' वयो विहंगमास्तैर्वर. विवरः एवं विधो वृक्षः तस्य सम्बोधने हे विवरतरो, अथवा हे वरतरो ? त्वया मुक्तानामपि पत्राणां पत्रत्वं न 'फिट्टइ' न याति; पुनर्यदि कथमपि तव छाया-शोभा होज्ज-अभविष्यत् 'ता' तावत् 'तेहिं पत्तेहिंति' तैः पत्रैरेव नान्यथेत्यर्थ. ।। ४९ ।।

३७० महु हिअउं तइं ताए तुहु, स वि अन्ने विनडिज्जइ ।
पिअ काइं करउं हउं,काइ तुहुं मच्छे मच्छु गिलिज्जइ ।।५०।।[2]

काचिन्नायिकाऽन्यासक्तं पतिं वक्ति—हे प्रिये ! मम

---

१. मालइ-विरहे रे तरुण-भसल मा रुवसु निब्भरुक्कण्ठ ।

वज्जालग्गे २४१

२. सा तुज्झ वल्लहा, तं सि मज्झ, वेसो सि तीअ, तुज्झ अहं ।

गाथासप्तशत्याम् २।२६

हृदयं त्वया गृहीतमिति शेषः। तया त्व गृहीतः। साऽन्यन्येनापि नटचते। हे प्रिय! अह कि करोमि? त्वं कि करोपि,? मत्स्येन मत्स्यो गिल्यते इत्यर्थः ।। ५० ।।

३७० पइं मइं वेहिंवि रण-गयहि, को जयसिरि तक्केइ।
केसहि लेप्पिणु जम-घरिणि, भण सुहु को थक्केइ ।।५१।।

त्वयि मयि च द्वयोरपि रणगतयोः को जयश्रियं तर्कयति अभिलषति। को यमगृहिणी केशैः 'लेप्पिणु' गृहीत्वा सुखं यथा स्यात्तथा 'थक्केइ' तिष्ठति त्व भण-कथय न कोऽपीत्यर्थः ।। ५१ ।।

३७० पइं मेल्लन्तिहे महु मरणु, मइं मेल्लन्तहो तुज्झु।
सारस जसु जो वेग्गला, सोवि कृदन्तहो सज्झु ।। ५२ ।।

स्त्री काचित् कथयति सारसान्योक्त्या स्वभर्तारं। हे सारस! त्वां मुञ्चन्त्या मम मरणम्, मां मुञ्चतस्तव मरणम्। यस्य यो दूरे स कृतान्तस्य यमस्य साध्यो भवति, मरण प्राप्नोतीत्यर्थः ।। ५२ ।।

३७१ तुम्हेहिं अम्हेहिं जं किअउं, दिट्ठउं बहुअजणेण।
त तेवड्डुउं समर-भरु, निज्जिउ एक्क-खणेण ।। ५३ ।।

युष्माभिरस्माभिर्यत्कृतं तद् बहुकजनेन दृष्टम्; कि कृतम्? तदाह-तत्तावन्मानः समरभरः एकक्षणेन निर्जित इत्यर्थः ।। ५३ ।।

३७२ तउ होन्तउ आगदो। तुज्झ होन्तउ आगदो।
तुध्र होन्तउ आगदो।

'तउ' त्वत्तः 'होन्तउ' भवन्-सन् आगतः। 'तुध्र' त्वत्तः भवन् आगतः। तुज्झ त्वत्तः।

३७२ सउ गुण-संपइ तुज्झ मदि, तुध्र अणुत्तार खन्ति ।
जइ उप्पत्ति अन्न जण, महि-मडलि खिक्खन्ति ।। ५४ ।।

महीमण्डलेऽन्ये जना यदि उपेत्य—तव पार्श्वे समागत्य तव गुणसम्पद शिक्षन्ते, तव मतिं शिक्षते, 'तुध्र' तव अनुत्तरा-प्रधानां 'खति' क्षमा च तदा वरमिति गम्यते इत्यर्थः ।। ५४ ।।

३७३ तुम्हहं होन्तउ आगदो । तुम्हहं केरउ धणु ।
'तुम्हहं' युष्मभ्यं भवन् सन् आगतः । युष्माकं 'केरउ' सम्बन्धि 'धणु' धनम् ।

३७५ तसु हउं कलिजुगि दुल्लहहो० ( दोहा १३ )
कलियुगे दुर्लभस्य तस्य नरस्याहम्० ।

३७६ अम्हे थोवा रिउ बहुअ, कायर एम्व भणन्ति ।
मुद्धि निहालहि गयण-यलु, कइ जण जोण्ह करन्ति ।।५५।।[1]

'अम्हे' वय स्तोका., 'रिउ' रिपवः शत्रवो बहवः प्रचुरतराः, 'एम्व' इत्थं कातराः भणन्ति—पठन्ति । मुद्धि हे मुग्धे ! सुन्दरि ! गगनतलं 'निहालहि' निभालय विलोकय, 'कइ' कियन्तो जनाः 'जोण्ह' ज्योत्स्नां कुर्वन्ति ? एकश्चन्द्र एवेत्यर्थः ।। ५५ ।।

३७६ अम्बणु लाइवि जे गया, पहिअ पराया केवि ।
अवस न सुअहि सुहच्छिअहि, जिवँ अम्हइं तिवँ तेवि ।।५६।।

'अम्बणु' ममत्वं 'लाइवि' लगयित्वा केऽपि परकीयाः परवश्याः ये पथिका अवश्यं 'न सुअहि' न स्वपन्ति 'सुहच्छि-

१. अम्हे थोडा रिउ बहुअ, इउ कायर चिन्तति ।
मुद्धि निहालहि गयणयलु, कइ उज्जोउ करति ।।
कुमारपालप्रतिबोधे पृ. २५७

अहिं' सुखासिकायां-शय्यायाम् । यथा वयं तथा तेऽपि पथिकाः । एतावता यथाऽस्माकं शय्याया स्वापो नास्ति तथा तेषामपि नास्ति, वियोगित्वात् ।।५६।।

३७७ मइं जाणिउं पिअविरहिअहं, कवि धर होई विआलि ।
णवर मिअकुधि तिह तवइ, जिह दिणयरु खय-गालि ।।५७।।[1]

हे प्रिये ? मया ज्ञातं विरहितानां पुरुषाणां कापि धराऽवलम्बनं भवति । कदा ? विकाले-सन्ध्याकाले । एतावता विरहिताना नवर-केवलं 'मिअकुवि' मृगाङ्कोऽपि 'तिह' तथा तपति, यथा 'खयगालि' क्षयकाले कल्पान्तकाले दिणयरु-दिनकरः ।। ५७ ।।

३७७ पइं मइं वेहिंवि रण गयहिं,० । (दोहा-५२)
मइं मेल्लन्तहो तुज्झु,० । (दोहा-५३)

पइं मइं० इत्यादि (दो. पूर्ववत्,) मइं मेल्लंतहो० इति (दो. पूर्ववत्,)

३७८ तुम्हेहिं अम्हेहिं जं किअउ० ( दोहा-५४ )
'तुम्हेहिं इत्यादि (दो. पूर्ववत्)

३७९ महु होन्तउ गदो । मज्झु होन्तउ गदो ।।
'महु' मत्तः भवन्: आगतः, मज्झु-मत्तः ।।

३७९ महु कन्तहो वे दोसडा, हेल्लि म झङ्खहि आलु ।
देन्तहो हउं पर उव्वरिअ, जुज्झन्तहो करवालु ।।५८।।

'हेल्लि' हे सखि ! मम कान्तस्य द्वौ दोषौ स्तः, अनर्थकं मा जल्प । कौ द्वौ दोषौ ? तदाह-एक स्तावत् दानं ददतः

1. अयं श्लोकः कुमारपाल प्रतिबोधे वर्तत्ते ।।

सतः 'पर' केवलमहमुद्धरिता, अपरस्तावत् युद्धयतः खड्गमुद्धरितमिति निन्दास्तुतिरित्यर्थः ॥५८॥[1]

३७९ जइ भग्गा पारक्कडा, तो सहि मज्झु पिएण ॥
अह भग्गा अम्हहं तणा, तो ते मारिअडेंण ॥५९॥[2]

'हे सखि ? यदि परकीया भग्नास्ततो मम प्रियेण, अथास्माकं सम्बन्धिनश्चेद्भग्नास्ततस्तेनम म भर्त्रा मारितेनैवेत्यर्थ' ॥ ५९ ॥

३८२ मुख-कबरि-बन्ध तहे सोह धरहिं,
नं मल्ल-जुज्झु ससि-राहु करहिं ।
तहे सहहिं कुरल भभर-उल-तुलिअ,
नं तिमिर-डिम्भ खेलन्ति मिलिअ ॥६०॥[3]

तस्या मुखकवरीबन्धौ वदनवेणीबन्धौ शोभां धरत. 'नं' उत्प्रेक्ष्यते शशिराहू मल्लयुद्धं कुरुतः । तस्या कुरलाः- केशाः शोभन्ते, किम्भूताः ? भ्रमरकुलतुलिताः- समानाः, 'नं' उत्प्रेक्ष्यते तिमिरडिम्भाः-अंधकारबालका मिलित्वा क्रीडन्तीत्यर्थ. ॥६०॥

३८३ बप्पीहा पिउ पिउ भणवि, कित्तिउ रुअहि हयास ।
तुह जलि महु पुणु वल्लहइ, बिहुंवि न पूरिअ आस ॥६१॥

---

१ निन्दागर्भिता स्तुतिरित्याशयः ।

२. जइ भग्गा पारक्कडा तो सखि मुज्झपियेण ।
जो भग्गा अम्हेतणा तो तिह जुञ्झयडेण ॥

राजस्थानी दोहा

३. घणसारतारनयणाए गूढ-कुसुमोच्चयो चिहुर-भारो ।
ससि-राहु--मल्ल--जुज्झ व दसिदमेण-नयणाए ॥

कर्पूरमंजञ्जर्याम् २-११

'वप्पीहा' हे चातक ! पिउ पिउ इति भणित्वा, स्त्रीपक्षे प्रियः प्रियः इति भणित्वा 'कित्तिउत्ति' कियद्वार त्वं 'रुअहि' रोदिषि । हे हताश ! तव जले-पानीये पुनर्मम वल्लभे-प्रिये 'विहुवि' द्वयोरपि आशा न पूरिता ।।६१।।

३८३ वप्पीहा काइं वोल्लिएण, निग्घिण वारइवार ।
सायरि भरिअइ विमल-जलि, लहहि न एक्कइधार ।।६२।।

'वप्पीहा निग्घिण' हे निर्लज्ज चातक ! 'वारइवार' वारंवारं 'वोल्लिएण' कथितेन 'काइं' किमस्ति । विमल जलेन सागरे भृते एकामपि धारां न लभसे इत्यर्थः ।।६२।।

३८३ आयहिं जम्महि अन्नहि वि, गोरि सु दिज्जहि कन्तु ।
गय मत्तहं चत्तङ्कुसह, जो अब्भिडइ हसन्तु ।।६३।।

'आयहिं' अस्मिन् 'जम्महि' जन्मनि अन्यस्मिन्नपि मम गौरि हे पार्वति ! 'सु' सः कान्तः दीयताम् । मत्तानां-गजानां त्यक्ताङ्कुशानां यो हसन् सन् अभ्येति सन्मुख याति ।।६३।।

३८४ वलि अब्भत्थणि महुमहणु, लहुइहूआ सोइ ।
जइ इच्छहु वड्डुत्तणउं, देह, म मग्गहु कोइ ।।६४।।

बलिराजस्य प्रार्थने सोऽपि मधुमथनः नारायणः लघुकाभूतः, अतः 'जइ' यदि वृद्धत्वं यूयमिच्छथ तदा दानं ददथ । 'म मग्गहु' मा मार्गयथ, कस्यापि पार्श्वे मार्गणं न कार्यमिति भावः ।।६४ ।

३८५ विहि विनडउ पीडन्तु गह, मं धणि करहि विसाउ ।
सपइ कड्ढउं वेस जिवँ, छुड्डु अग्घइ ववसाउ ।।६५।।

विधिर्नटतु, ग्रहाः पीडयन्तु, हे प्रिये ! मा विषादं कुरु, वेषमिव सम्पद कर्षयामि, अथवा वेश्यामिव कपयामि, यथा वेश्या द्रव्येणाकर्ष्यते, 'छुडु' यदि व्यवसाय उद्यमोऽर्घति विद्यते ('अग्घइ' राजते) तदा सम्पदः सुलभा इत्यर्थः ।।६५।।

३८६ खग्ग-विसाहिउ जहिं लहहुं, पिय तहिं देसहि जाहुं ।
रण-दुब्भिक्खे भग्गाइं, विणु जुज्झे न वलाहुं ।।६६।।

हे प्रिये ! यस्मिन् देशे खड्गेनापि साधितं लभामहे तस्मिन् देशे यामः । वयं रणदुर्भिक्षेण भग्ना युद्धेन विना न वलामहे न रतिं प्राप्नुम इत्यर्थः ।।६६।।

३८७ कुञ्जर सुमरि म सल्लइउ, सरला सास म मेल्लि ।
कवल जि पाविय विहि-वसिण, ते चरि माणु म मेल्लि ।।६७।।[1]

हे कुञ्जर ! मा स्मर सल्लकीः, सरलान् दीर्घान् निःश्वासान् मा मुञ्च, विधिवशेन ये कवलाः प्राप्तास्तान् चर, मा मानं मुञ्चेत्यर्थः ।।६७।।

३८७ भमरा एत्थु वि लिम्बडइ, केवि दियहडा विलम्बु ।
घण-पत्तलु छाया-बहुलु, फुल्लइ जाम कयम्बु ।।६८।।[2]

हे भ्रमर ! अत्रापि निम्बे तावत् कति दिवसान् विलम्बस्व, यावत् घनपत्रवान् छाया बहुलः कदम्बः प्रफुल्लतीत्यर्थः ।। ६८ ।।

३८७ प्रिय एम्वहिं करे सेल्लु, करि, छड्डहि तुहुं करवालु ।
जं कावालिय बप्पुडा, लेहिं अभग्गु कवालु ।। ६९ ।।

---

१. मा सुमरसु चन्दण-पल्लवाण, करि-णाह गेण्ह तिण-कवलं ।
जं जह परिणमइ दसा, तं तह धीरा पडिच्छंति ।।
वज्जालग्गे १९२

२. छप्पय गमेसु कालं वासव-कुसुमाइ ताव मा मुयसु ।
मन्ने जियन्तो पेच्छसि पउरा रिद्धी वसंतस्स ।।
वज्जालग्गे २४४

हे प्रिये ! इदानी शल्यं कुन्तं करे कुरु, त्वं करवालं मुञ्च, येन वराकाः कापालिका योगिनः अभग्नं कपालं गृह्णन्ति ॥६९॥

३८८ दिअहा जन्ति झडप्पडहिं, पडहिं मणोरह पच्छि।
जं अच्छइ तं माणिअइ, होसइ करतु म अच्छि ॥७०॥

दिवसा वेगैर्यान्ति, मनोरथाः पश्चात्पतन्ति, यदस्ति तन्मान्यते, कोऽर्थः–दीयते भुज्यते। भविष्यतीति कुर्वन् मा 'अच्छि' मा आस्व मा तिष्ठेत्यर्थ. ॥७०॥

३८९ सन्ता भोग जु परिहरइ, तसु कन्तहो बलि कीसु।
तसु दइवेणवि मुण्डियउ, जसु खल्लिहडउ सीसु ॥७१॥[1]

यः सतो–विद्यमानान् भोगान् परिहरति तस्य कान्तस्य बलि–पूजां क्रिये (करोमीति भावः)। यस्य शीर्षं खल्वाटं तस्य दैवेनैव मुण्डितम्, को भावः? यस्य भोगा न सन्ति स तु स्वयमेव त्यजतीत्यर्थः ॥७१॥

३८९ बलि किज्जउं सुअणस्सु०। पूर्ववत् (दोहा १३)

३९० अइ तुगत्तणु जं थणह, सो छेयउ न हु लाहु।
सहि जइ केवइ तुडि-वसेण, अहरि पहुच्चइ नाहु ॥७२॥

यत् स्तनानां अतितुंगत्वं तच्छेदकं न तु लाभः। हे सखि ! यदि कथमपि त्रुटिवशेन कालविलम्बेन नाथोऽधरे प्रभवति, अन्यथा न लगत्येव, स्तनयोरतितुङ्गत्वात् ॥७२॥

३९१ बुवह सुहासिउ किंपि।
ब्रूत सुभाषितम् किमपि ॥

---

१. सता विसय जु परिहरइ बलि किज्जउं हउ तासु।
सो दइवेण जि मुण्डिअउ सीसु खडिल्लउ जासु ॥
परमात्मप्रकाशे २-१३९

३९१ इत्तउ ब्रोप्पिणु सउणि ठिउ, पुणु दूसासणु ब्रोप्पि ।
तो हउं जाणउ एहो हरि, जइ महु अग्गइ ब्रोप्पि ॥७३॥

दुर्योधनोक्तिरियम्-शकुनिर्भीममातल इयद् उक्त्वा स्थितः, पुनर्दुःशासन उक्त्वा स्थितः, अह ततस्तर्हि जाने यद्येष हरिर्ममाग्रे उक्त्वा तिष्ठतीत्यर्थः ॥७३॥

३९२ वुञइ । वुञेप्पि । वुञेप्पिणु ।

व्रजति व्रजित्वा ।

३९३ पस्सदि ।

पश्यति ।

३९४ पठ गृण्हेप्पिणु व्रतु

व्रतं गृहित्वा पठ ।

३९५ जिवँ तिवँ तिक्खा लेवि कर, जइ ससि छोल्लिज्जन्तु ।
तो जइ गोरिहे मुह-कमलि, सरिसिम कावि लहन्तु ॥७४॥[1]

यथा तथा शशी तीक्ष्णायुधानि लात्वा करान् यद्यतक्षिष्यत, ततो जगति गौर्याः चन्द्राननाया. मुखकमलेन सह कामपि सदृशतामलप्स्यतेत्यर्थः ॥७४॥

३९५ चूडुल्लउ चुण्णीहोइसइ, मुद्धि कवोलि निहित्तउ ।
सासानल-जाल-झलक्किअउ, वाह-सलिल-संसित्तउ ॥७५॥[2]

हे मुग्धे ! कपोले निहितः स्थापितः चूटकश्चूर्णीभविष्यति । किम्भूतश्चूटकः ? श्वासानलज्वालादग्धः । पुनः

१. पण्डुर जइवि रज्जए मुह कोमलङ्गि खडियारसेण ।
दिज्जए पुण कवोल-कज्जल ता लहेज्ज ससिणो विडम्बण ॥

कर्पूरमञ्जर्याम् ३।३२

२. चुडउ चुण्णीहोइसइ, मुद्धिकवोलि निहत्तु ।
सासानलिण झलक्कियउ, वाहसलिलसंसित्तु ॥

कुमारपालप्रतिबोधे पृ० १०८

किंभूतः ? वाष्पसलिलससिक्त इत्यर्थः ॥७५॥

३९५ अब्भड वंचिउ बे पयइ, पेम्मु निअत्तइ जावँ ।
सव्वासण-रिउ-संभवहो, कर परिअत्ता तावँ ॥७६॥

द्वे पदे ' अब्भड ' अनुव्रज्य वञ्चित्वा वंचितो वा यावत् ' पेम्मु ' स्नेहं कश्चित्पुमान् निर्वर्त्तयति, अथवा प्रेमशब्देन प्रिया वाच्या अभेदोपचारात्, यथा प्रेमवती तथा प्रेमापि प्रिया । प्रियमिति शेषः, तावत् सर्वाशनरिपुसम्भवश्चन्द्रः सर्वाशनो वैश्वानरः, तस्याग्ने रिपुः सागरः तस्मात् सभव उत्पत्तिर्यस्यासौ, एतावता चन्द्रः तस्य कराः किरणाः ' परिअत्ताः ' प्रसृताः । एतावता चन्द्रोद्गमने उभयोः स्नेहवृद्धौ गमनागमनं जातम् ॥७६॥

३९५ हिअइ खुडुक्कइ गोरडी, गयणि घुडुक्कइ मेहु ।
वासा-रत्ति-पवासुअह, विसमा संकडु एहु ॥७७॥

गौरी स्त्री हृदये ' खुडुक्कइ ' शल्यायते । मेघो गगने गर्जति । वर्षारात्रे प्रवासिनां चलितानां पथिकानां विषमं सङ्कटमेतदित्यर्थः ॥७७॥

३९५ अम्मि पओहर वज्जमा, निच्चु जे सम्मुह थन्ति ।
महु कन्तहो समरङ्गणइ, गय-घड भज्जिउ जन्ति ॥७८॥

स्त्री कथयति—हे अम्ब ! मम पयोधरौ वज्रसमौ स्तः, यौ नित्यमेतस्य मम कान्तस्य सन्मुखौ तिष्ठतः । एतस्येति कस्य ? यस्याग्रे गजघटाः समराङ्गणे भङ्क्त्वा यान्तीत्यर्थः ॥७८॥

३९५ पुत्ते जाएं कवणु गुणु, अवगुणु कवणु मुएण ।
जा बप्पीकी भुंहडी, चम्पिज्जइ अवरेण ॥७९॥

जातेन पुत्रेण को गुणः, मृतेन पुत्रेण कोऽप्यगुणः। येन पुत्रेण सतेति गम्यते या पैतृकी भूमिरपरेणाक्रम्यते गृह्यत इत्यर्थः ॥७९॥[1]

३९५ त तेत्तिउ जलु सायरहो, सो तेवडु वित्थारु।
तिसहे निवारणु पलुवि नवि, पर धुद्धुअइ असारु ॥८०॥

तत्तावज्जलम्, स तावन्मात्रो विस्तारः, परं-केवलं तृषाया निवारण पलमपि नैव स्यादिति शेषः, असारः सन् शब्दायते इत्यर्थः ॥८०॥

३९६ जं दिट्ठउ सोम-ग्गहणु, असइहिं हसिउ निसंकु।
पिअ-माणुस-विच्छोह-गिलिगिलि राहु मयङ्कु ॥८१॥[2]

यत्सोमग्रहणं दृष्ट तन्निःशङ्कं यथा स्यात्तथाऽसतीभिः स्त्रीभिर्हसितः सोमः। हे राहो ! प्रियाणामभिष्टाना मनुष्याणां विक्षोभो वियोगः तस्य 'गरु' करं (तं करोतिति) मृगाङ्कं गिल गिल त्व भक्षय भक्षय इत्यथ. ॥८१॥

३९६ अम्मीए सत्थावत्थेहि, सुधिं चिन्तिज्जइ माणु।
पिए दिट्ठे हल्लोहलेण, को अप्पाणु ॥८२॥

'अम्मीए' हे अम्बिके ? हे मातः ? स्वस्थावस्थैः स्वस्थचित्तैः 'सुधि' सुखेन मानोऽहंकारश्चिन्त्यते। परं प्रियेऽभीष्टे दृष्टे सति 'हल्लोहलेण' व्याकुलत्वेनात्मानं कः पुमान् 'चेअइ' जानाति ॥८२॥

---

१. बेटा जाया कवण गुण अवगुण कवणु मिएण।
जा उभा घर आपणी गजीजै अवरेण ॥

राजस्थानी दोहा

२. रे रे विडप्प मा मुयसु दुज्जण गिलसु पुण्णिमायन्द।

वज्जालग्गे ४८३

३६६ सबधु करेप्पिणु कधिदु मइ, तसु पर सभलउं जम्मु ।
जासु न चाउ न चारहडि, नय पम्हट्ठउ धम्मु ।।८३।।

शपथं कृत्वा मया कथितम्, परं-केवलं तस्य जन्म सफलम् । यस्य त्यागो न प्रभ्रष्टः-न प्रमुषितः दान न गतम् । यस्य चारभटी न प्रमुषिता न भ्रष्टा शूरवृत्तिन गता । यस्य धर्मो न प्रमुषितो न प्रभ्रष्ट इत्यर्थः । अस्यापरा व्याख्या-'मइ' मया 'सवधु' शपथ 'करेप्पिणु' कृत्वा, कधिदु कथितम्, 'तसु' तस्य नरस्य 'पर' पर 'सभलु' सफल 'जम्मु' जन्म । यस्य न 'चाउ' अपव्ययो नास्ति । यस्य न 'चारहडि' आरभटी–प्रकृति नास्ति । न च 'धम्मु' धर्म्मः 'पम्हट्ठउ' प्रभ्रष्टः ।।८३।।

गिलि० इत्यादि पूर्ववत् (दोहा ८२)
एक्कहिं० इत्यादि पूर्ववत् (दोहा ३२) ।

३९६ जइ केवँइ पावीसु पिऊ, अकिआ कुड्डु करीसुं ।
पाणीउ नवइ सरावि जिवँ, सव्वङ्गे पइसीसु ।।८४।।

स्त्री कथयति–यदि कथंचित् प्रियं प्राप्स्यामि तर्हि अकृत कौतुकं करिष्यामि । यथा नवे शरावे पानीयं सर्वाङ्गेण प्रविशति, तथा सर्वाङ्गेण प्रवेक्ष्यामीत्यर्थः ।।८४।।

३९६ उअ कणिआरु पफुल्लिअउ, कञ्चण कान्ति-पयासु ।
गौरी-वयण-विणिज्जिअउं, [न सेवइ वणवासु ।।८५।।

त्वं पश्य, कर्णिकारवृक्षः प्रफुल्लितः, किम्भूतः ? कांचनकान्तिप्रकाशः । 'नं' उत्प्रेक्ष्यते-गौरीवदननिर्जितः सन् वनवासं सेवते इत्यर्थः ।।८५।।

३९७ तसुपर सभलउ जम्मु०
इत्यादि पूर्ववत् (दोहा ८४)

३९८ जइ केवइ पावीसु पिउ०
इत्यादि पूर्ववत् (दोहा ८५)

३९८ जइ भग्गा पारक्कडा तो सहि मज्झु **प्रियेण**
इत्यादि पूर्ववत् (दोहा ६०)

३९९ व्रासु महारिसि एउ भणइ, जइ सुई-सत्थु पमाणु।
मायह चलण नवन्ताहं, दिवि दिवि गङ्गा-ण्हाणु ॥८६॥

व्यासो महर्षिः एतद्भणति-यदि श्रुतिशास्त्र प्रमाणम्, तर्हि मातॄणां जननीनां चरणौ नमता सता दिवसे दिवसे गङ्गास्नानमित्यर्थः ॥८६॥

३९९ **वासेणवि भारह-खम्भि बद्ध।**
व्यासेनापि भारतस्तम्भे बद्धाः ॥

४०० अनउ करन्तहो पुरिसहो **आवइ**।
अन्याय कुर्वतः पुरुषस्य आपत्-विपत् आयाति । न्यायं कुर्वत. पूरुषस्यद्भवति ॥
गुणहिं न संपय कित्ति पर० । इति पूर्ववत् ॥ (दोहा १०)

४०१ **केम** समप्पउ दुट्ठु दिणु, **किध** रयणी छुडु होइ।
नव-वहु- दसण-लालसउ, वहइ मणोरह सोइ ॥८७॥

दुष्टो दिनः कथ समाप्यताम् । रात्रिः कथं भवति छुडु शीघ्रम् । सोऽपि नववधूदर्शनलालस एवंविधानिति शेष', मनोरथान् वहतीत्यर्थः ॥८७॥

४०१ ओ गोरी-मुह-निज्जिअउ, वद्दलि लुक्कु मियंकु।
अन्नुवि जो परिहविय-तणु, सो किवँ भवँइ निसङ्कु ॥८८॥

'ओ' सूचनायां गौरीमुखविनिर्जितो मृगाङ्को वार्दले निलीनः । अन्योऽपि यः परिभूततनु स नि.शङ्क कथं भ्रमतीत्यर्थः ॥८८॥

४०१ बिम्बाहरि तणु रयण-वणु, किह ठिउ सिरिआणन्द ।
निरुवम रसु पिए पिअवि जणु, सेसहो दिण्णी मुद्द ॥८९॥

हे श्री आनन्द ! अथवा श्री आनन्द शोभाकर रदनव्रणं दन्तव्रण कथ स्थितम् ? । कथमिति प्रश्ने । क्व ? बिम्बाधरे, कस्याः ? तन्व्याः स्त्रियाः । उत्तर ददाति–'जणु' उत्प्रेक्ष्यते, प्रियेणाधरस्य निरुपम रस पीत्वा शेषरसस्य मुद्रा दत्तेत्यर्थः ॥९८॥

४०१ भण सहि निहुअउ तेवँ मइं, जइ पिउ दिट्ठु सदोसु ।
जेवँ न जाणइ मज्झु मणु, पक्खावडिअ तासु ॥९०॥

हे सखि ! मा प्रति निभृतं छन्न यथा स्यात्तथा भण कथय, यदि त्वया प्रियः सदोषो दृष्टः । तस्यान्यतरस्य पक्षापतित पार्श्वे स्थित मम मनो यथा न जानाति भर्त्तेति गम्यते, ममाग्रे त्वया छन्न वाच्यमित्यर्थः ॥९०॥

जिवँ जिवँ०–इति पूर्ववत् मइ जाणिउ० इत्यादि पूर्ववत् ( दो० )

४०२ मइ भणिअउ बलिराय तुहुं, केहउ मग्गण एहु ।
जेहु तेहु नवि होइ वढ, सइं नारायणु एहु ॥९१॥

हे बलिराज ! मया त्व भणितः, कीदृग् ? मार्गण एषः । बलिराइ–यादृग् तादृग् न भवति, रे मूर्ख ! ईदृग् स्वयं नारायण इत्यर्थः ॥९१॥

४०४ जइ सो घडदि प्रयावदी, केत्थुवि लेप्पिणु सिक्खु ।
जेत्थुवि तेत्थुवि एत्थु जगि, भण तो तहि सारिक्खु ॥९२॥

यदि स प्रजापतिः कुत्रापि शिक्षां लात्वा यत्रापि तत्रापि जगति घटयति, तर्हि भण कथय, तस्याः सादृश्यं को घटयतीत्यर्थः ॥९२॥

केत्थुवि० इत्यादि पूर्ववद् व्याख्या ॥

४०६ **जाम** न निवडइ कुभ-यडि, सीह-चवेड चडक्क ।
**ताम** समत्तहं मयगलहं, पइ-पइ वज्जइ ढक्क ।।९३।।

यावत् कुम्भतटे सिंह–चपेटाचटत्कारो न निपतति, तावत् समस्ताना मदकलाना गजानां पदे पदे ढक्का **वाद्यते** इत्यर्थः ।।९३।।

४०६ तिलहं तिलत्तणु **ताउं** पर, **जाउं** न नेह गलन्ति ।
नेहि पणट्ठइ तेज्जि तिल, तिल फिट्टवि खल होन्ति ।।६४।।[1]

पर–केवलं तिलाना तिलत्व तावत्, यावत् स्नेहो न गलति । स्नेहे प्रनष्टे त एव तिलाः तिलाद् भ्रष्टाः खला भवन्तीत्यर्थः ।।६४।।

४०६ **जामंहि** विसमी कज्ज-गइ, जीवहं मज्झे एइ ।
**तामंहि** अच्छउ इयरु जणु, सुअणुवि अन्तरु देइ ।।६५।।

यावज्जीवाना मध्ये विषमा कार्यगतिरायाति ताव-दास्तामितरजनः, परं स्वजनोऽपि अन्तरं ददाति पृष्ठं ददातीत्यर्थः ।।९५।।

**जेवडु** अन्तरु रावण रामहं,
**तेवडु** अन्तरु पट्टण गामहं ।

'जेवडु' यावन्मात्र रावणरामयोरन्तरमस्ति, 'तेवडु' तावन्मात्रं अन्तर ग्रामपट्टणयोः समस्ति ।।

४०९ ते मुग्गडा हराविआ, जे परिविट्ठा ताह ।
**अवरोप्परु** जोअन्ताह, सामिउ गंजिउ जाह ।।६६।।

---

१. तावच्चिय ढलहलया जावच्चिय नेहपूरियसरीर ।
सिद्धत्था उण छेया नेहविहूणा खलीहुन्ति ।।

वज्जालग्गे ५५९

ये तेषां परिवेषिताः ते मुद्गाः हारिता मुधा जाताः, येषां 'अवरोप्पर' परस्परं जोअन्ताह (पश्यताम्) युध्यतां सतां स्वामी गञ्जित –पीडित इत्यर्थः ।।

सुधे०, तसुहउ०, अन्नु जु०, बलि०, दइवु०, तरुहुं०, खग्गविसाहिउ०, तणहु० इत्यादी पूर्ववत् ।।

४१२ बम्भ ते विरला केवि नर, जे सव्वङ्ग-छइल्ल ।
जे वङ्का ते वञ्चयर जे उज्जुअ ते वइल्ल ।।९७।।

हे ब्रह्मन् ! ते केऽपि नरा विरलाः, ये 'सव्वगछइल्ल सर्वाङ्गैर्दक्षाः । ये वक्रास्ते वंचकतरा अत्यर्थवञ्चकाः । ये तु ऋजवस्ते बलीवर्दाः मूर्खा इत्यर्थः ।।९७।।

४१४ अन्ने ते दीहरलोअण, अन्नु त भुअ-जुअलु ।
अन्नु सु घण थण-हारु, त अन्नु जि मुह-कमलु ।।
अन्नु जि केस-कलावु, सु अन्नु जि प्राउ विहि ।
जेण णिअम्बिणि घडिअ, स गुण-लायण्ण-णिहि ।।९८।।

ते दीर्घलोचने अन्य एव, अन्यदेव तद् भुजयुगलम्, सोऽन्यो घनस्तनभारः घनो-निविडः, तदन्यदेव मुखकमलम्, अन्य एव स केशपाशः, प्रायः स विधिरन्य एव, येन सा नितम्बिनी घटिता । किम्भूता सा गुणलावण्यनिधिरित्यर्थः ।।९८।।

४१४ प्राइव मुणिहवि भन्तडी, ते मणिअडा गणन्ति ।
अक्खइ निरामइ परम-पइ, अज्जवि लउ न लहन्ति ।।९९।।

'प्राइव' प्रायो मुनीनामपि भ्रान्तिः, 'ते' तेन कारणेन मुनयो मणिकान् गणयन्ति । अक्षये निरामये परमपदे सिद्धिलक्षणे स्थाने यद्यापि लय न लभन्ते । अतः किं शून्यध्यानेनेत्यर्थः ।।९९।।

४१४ असु-जले प्राइम्व गोरिअहे, सहि उव्वत्ता नयण-सर ।
ते सम्मुह सपेसिआ, देन्ति तिरिच्छी घत्त पर ।।१००।।

हे सखि ! प्रायो गौर्या अश्रुजलेन नयनसरसो उद्वृते उल्लसिते, तेनापरे नयनसरसी सम्मुखे प्रेषिते, परं–केवलं तिर्यग्घातं दत्त इत्यर्थः ।।१००।।

४१४ एसी पिउ रूसेसु हउ, रुट्ठो मइ अणुणेइ ।
पग्गिम्व एइ मणोरहइ, दुक्करु दइउ करेइ ।।१०१।।

प्रिये एष्यति समागमिष्यति अहं रुषियामि । रुष्टां मामनुनयति ( भाषायाम् ) मनावइ । प्रायो दयिता एतान्मनोरथान् दुष्करान् करोति, इष्टकाले समागमनादित्यर्थ. ।।१०१।।

४१५ विरहानल–जाल–करालिअउ,
पहिउ कोवि बुड्डिवि ठिअओ ।
अनु सिसिर-कालि सीअल-जलहु,
धूमु कहन्तिहु उट्ठिअओ ।।१०२।।

कोऽपि कविर्जले धूम दृष्ट्वा प्राह-कोऽपि पथिको विरहानलज्वालाकरालित. पीडितो ब्रुडित्वा स्थितोऽस्ति । अन्यथा शिशिरकाले शीतजलाद्धूमः कुत इत्यर्थः ।।१०२।।

४१६ महु कन्तहो गुट्ठ-ट्ठिअहो, कउ झुम्पडा बलन्ति ।
अह रिउ-रुहिरे उल्हवइ, अह अप्पणे न भन्ति ।।१०३।।

गोष्ठस्थितस्य मम कान्तस्य कुतः कुटिरकाणि ज्वलन्ति । अथ रिपुरुधिरेण विध्यापयति, अथात्मना येन न भ्रान्तिरित्यर्थ· ।।१०३।।

जइ भग्गा० व्याख्या पूर्ववत् ।।

४१८ पिय-संगमि कउ निद्दडी, पिअहो परोक्खहो केम्व ।
मइ बिन्निवि विन्नासिआ, निद्द न एम्व न तेम्व ।।१०४।।

प्रियसगमे कुतो निद्रा ? प्रियस्य परोक्षस्य 'सप्तम्याः' प्रिये परोक्षे सति कथं निद्रा ? मया द्वे अपि विनाशिते

क्षयं नीते। द्वाभ्यां संयोगवियोगाभ्यां निद्रा न एव न तथेत्यर्थः ॥१०४॥

गुणहिं न सपय किति ५२०। व्याख्या पूर्ववत्।

४१८ कन्तु जु सीहहो उवमिअइ, त महु खडिउ माणु।
सीहु निरक्खय गय हणइ, पिउ पय-रक्खसमाणु ॥१०५॥

कान्तो यदि सिंहेन सहोपमीयते, तदा मम मानः खण्डितः। सिंहो नीरक्षकान्-रक्षपालरहितान् गजान् हन्ति। प्रियः पदरक्षैः सम-पदातिरक्षैः सह गजान् रणे हन्ति। (सिंहादधिक पराक्रमवान् मम कान्त इत्यर्थ.) ॥१०५॥

४१८ चंचलु जीविउ ध्रुवु मरणु, पिअ रूसिज्जइ काइ।
होसइं दिअहा रूसणा, दिव्वइं वरिस-सयाइ ॥१०६॥

जीवित चञ्चलम्, मरण ध्रुवम्, हे प्रिये! रुष्यते कथम्? रोषणस्य दिवसो दिव्यानि वर्षशतानि भविष्यति (दिवसो विरहेण दिव्यवर्षशततुल्यदीर्घो भविष्यति) इत्यर्थः ॥१०६॥

४१८ माणि पणट्ठइ जइ न तणु, तो देसडा चइज्ज।
मा दुज्जण-कर-पल्लवेहिं, दसिज्जन्तु भमिज्ज ॥१०७॥[1]

माने प्रनष्टे यदि तनुर्न त्यज्यते, ततो देशस्त्यज्यते। परं दुर्जनकरपल्लवैर्दृश्यमानो मा भ्राम्य ॥१०७॥

४१८ लोणु विलिज्जइ पाणिएण, अरि खलमेह म गज्जु।
बालिउ गलइ सु झुम्पडा, गोरी तिम्मइ अज्जु ॥१०८॥

हे मेघ! मा गर्ज, लवणं-सामुद्रं पानीयेन विलीयते, ज्वालितो मेघो गलति, अद्य सकुटीरिका गोरी तिम्यते भीजइ (भाषायाम्) इत्यर्थ.। द्वितीयप्रकारेण व्याख्या-अरि-अरे हे खलमेघ हे दुर्जनमेघ! 'बालिउ' ज्वालितस्त्वा 'म गज्जु'

१. अयं श्लोक कुमारपालप्रतिबोधे वर्तते पृ. १२॥

मा गज्ज । यत: गौर्या: 'लोणु' लावण्य पाणिएण-पानीयेन विलिज्जइ-विलीयते, 'सु'-तत् 'झुम्पडी' कुटीरकं 'गलइ'-गलति श्च्योतति, गौरी-नारी 'तिम्मइ' आर्द्रीभवति ॥१०९॥

४१८ विहवि पणट्ठइ वकुडउ, रिद्धिहिं जण सामन्नु ।
किंपि मणाउं महु पिअहो, ससि अणुहरइ न अन्नु ॥१०९॥

विभवे प्रनष्टे सति सामान्यो जनो लोक: ऋद्धया श्रिया वक्रीस्यात् । 'मणाउ' मनाक् 'ससित्ति' चन्द्र. 'महु' मम 'पियहो' प्रियस्य अनुहरते साद्दश्यं घत्ते नान्य. कोऽपि । भावार्थस्त्वयं यथा चन्द्रस्य तारका वक्रा भवन्ति, तथा मम प्रियस्य निर्द्धनस्य अन्ये जना वक्रा भवन्ति ॥१०९॥

४१९ किर खाइ न पिअइ न विद्दवइ,
धम्मि न वेच्चइ रूअडउ ।
इह किवणु न जाणइ जह,
जमहो खणेण पहुच्चइ दूअडउ ॥११०॥

'किर' किल खादति, न पिबति, न ददाति, धर्मे रूपकं न व्ययति, इह कृपणो न जानाति-यथा यमस्य दूत: क्षणेन प्रभवतीत्यर्थ: ॥११०॥

४१९ जाइज्जइ तहिं देसडइ, लब्भइ पियहो पमाणु ।
जइ आवइ तो आणिअइ, अहवा त जि निवाणु ॥१११॥

तस्मिन् देशे 'जाइज्जइ' गम्यते, यत्र पियहो प्रियस्य 'पमाणु' प्रमाणं शुभाशुभादिस्वरूपं लभ्यते, 'जइ' यदि आयाति तदा प्रतिस्वरूपं 'आणिअइ' आनीयते, अथवा 'तं जि' तदेव निर्वाणस्थानमाश्रीयते ॥१११॥

दिवि दिवि गंगा-ण्हाणु ॥ व्याख्या पूर्ववत् ।

४१९ जउ पवसन्ते सहुं न गयअ, न मुअ विओए तस्सु ।
लज्जिज्जइ सदेसडा, दिन्तिहि सुहय-जणस्सु ॥११२॥[1]

(कस्याश्चित् प्रोषितभर्तृकायाः सखी प्रत्युक्तिः)—यदि प्रवसता—प्रवास कुर्वता प्रियेण सह न गता, अथ तस्य वियोगेन न मृता । तर्हि तस्य सुभगजनस्य संदेशान् ददतीभिरस्माभिर्लज्यते इत्यर्थः ॥११२॥

४१९ एत्तहे मेह पिअन्ति जलु; एत्तहे वडवानल आवट्टइ ।
पेक्खु गहीरिम सायरहो, एक्कवि कणिअ नांहि ओहट्टइ ।११३।

हे नाथ ! इत.—अस्मिन् पार्श्वे मेघा जल पिबन्ति । इतः अस्मिन् पार्श्वे वडवाग्निः जल 'आवट्टइ'—आवर्तते शोषयति । त्व पश्य सागरस्य 'गहीरिम' गम्भीरत्वम्, एकोऽपि कणिको बिन्दुमात्रमपि 'नांहि' नहि ओहट्टइ—हीनतां याति ॥११३॥

पच्छइ होइ विहाणु । एम्वइ सुरउ समत्तु । व्याख्या पूर्ववत्

४२० जाउ म जन्तउ पल्लवह, देक्खउं कइ पय देइ ।
हिअइ तिरिच्छी हउ जि पर पिउ डम्बरइ करेइ ॥११४॥

(कश्चित्) स्त्री कथयति—याति तदा यातु, पल्लवं वस्त्राचलं गृहीत्वा 'म जतउ' मा रक्षतु यातुः पुरुषस्य पत्युः, पश्यामि, अथ पतिः कति पदानि दत्ते । पुनर्हृदये अहं 'जि' एवार्थे, तिरिच्छि तिर्यग् भूता ( भाषायाम् ) आडीरही छउं । पर केवलं प्रिय आडम्बराणि करोति न तु यास्यतीत्यर्थः ॥११४॥

१. जसुपवसत न पवसिया मुइअ वियोइ न जासु ।
लज्जिज्जउ सदेसडउ दिंती पहिय पियासु ॥ संदेशरासके ७०

४२० हरि नच्चाविउ पङ्गणइ, विम्हइ पाडिउ लोउ ।
एम्वहिं राह-पओहरहं, ज भावइ त होउ ॥११५॥

वलिदैत्येन नारायण. प्रागणे नृत्यापितः ( नर्तित ) विस्मये लोकः पातित॰ । इदानी राधापयोधरयोः गोपाङ्गना-पयोधरयोः यत्प्रतिभाति तद्भवतु ॥११६॥

४२० साव-सलोणी गोरडी, नवखी कवि विस-गण्ठि ।
भडु पच्चलिउ सो मरइ, जासु न लग्गइ कण्ठि ॥११७॥

सर्वसलावण्या सर्वाङ्गकोमला गौरी भामिनी 'नवखी' नवीना अभिनवा कोऽपि विपग्रन्थिः समस्ति । यस्य कण्ठे न लगति ' पच्चुलिउ ' प्रत्युत स सुभट म पुमान् ' मरइ ' म्रियते । अन्या विषग्रन्थि॰ स्यात्सा कण्ठे विलग्ना सती मारयति, इयं गौरीरूपा विपंग्रन्थिः कण्ठेऽलग्ना मारयतीत्यर्थः ॥११६॥

४२१ मइ वुत्तउ तुहु धुरु धरहि, कसरेहिं विगुत्ताइ ।
पइ विणु धवल न चडइ भरु, एम्वइ वुन्नउ काइ ॥११७॥

हे धवल हे वृषभ ! कसरेहिति-दम्यैः कलोलडकैर्विगुप्ताः, भारस्त्वया विना न चटत्ति, एवं कि विषादवान् किं विषदप्राप्तः, पुन॰ पूर्वं मयोक्त यत्त्वं धुरु–धर धरहिति-धूर्भारमुत्पाटयेत्यर्थः ॥११८॥

मइ वुत्तउ. ज मणु विच्चिच न माइ ॥ व्याख्या-पूर्ववत् ।

४२२ एक्कु कइअ ह वि न आवही, अन्नु वहिल्लउ जाहि ।
मइ मित्तडा प्रमाणिअउ, पइ जेहउ खलु नाहि ॥ ११९॥

ह इति सम्बोधने, कदापि नायाति 'एक्कु' एष नरः, अन्यश्चेत्कदाचिदायाति, तदा वहिल्लउ शीघ्रं याति,

---

१. अय श्लोक. सरस्वतीकण्ठाभरणे वर्तते ३–६२ ॥

मित्तड़ा–हे मित्र मया यादृक् प्रियः प्रमाणिअउ–अनुज्ञातः
तादृग् त्वया खलु-निश्चये नाहिं–नहि ज्ञातः ॥११८॥

४२२ जिवँ सुपुरिस तिवँ घंघलइं, जिवँ नइ तिवँ वलणाइं ।
जिवँ डोगर तिवँ कोट्टरइं, हिआ विसूरहि काइं ॥११९॥

यथा यथा सत्पुरुषा वहवः सन्ति तथा तथा 'घंघलइं' ( भाषायाम्–जगडा ) ( जगटकानि ) भवन्ति, यथा 'नइ' नद्य. तथा वलनानि, यथा पर्वतास्तथा 'कोटरइ'–( भाषायाम् कोतराणि ) हे हृदय ? किं खिद्यसे ? ॥११९॥

४२२ जे छड्डेविणु रयणनिहि, अप्पउ तडि घल्लन्ति ।
तह सखह विट्टालु परु, फुक्किज्जन्त भणन्ति ॥ १२० ॥

ये शङ्खाः रत्नाकरं समुद्र 'छड्डैविणु'–त्यक्त्वा आत्मानं तटे क्षिपन्ति, तदा तेषां शंखानां फुत्कुर्वाणा सन्तः परं केवलं 'विट्टालु' अधमजना भ्रमन्ति ॥१२०॥

४२२ दिवेहिं विढत्ताउ खाहि वढ, सचि म एक्कुवि द्रम्मु ।
कोवि द्रवक्कउ सो पडइ जेण समप्पइ जम्मु ॥१२१॥

हे 'वढ' हे मूर्ख ! दैवार्जितं खाद, 'मा संचित्ति' मा सञ्चय एकमपि द्रम्मम्, यतः किमपि तद्भूयं पतति, येन जन्म समाप्यते ॥१२१॥

फोडेन्ति जे हिअडउ अप्पणउ ॥ व्याख्या पूर्ववत् ॥

४२२ एकमेक्कउं जइवि जोएदि, हरि सुट्ठु सव्वायरेण ।
तोवि द्रेहि जहिं कहिवि राही, को सक्कइ सवरेवि
दड्ढ–नयणा नेहे पलुट्टा ॥ १२२ ॥[1]

---

1. सव्व गोविउ जइवि जोएइ
हरि सुट्ठु वि आयरेण देइ दिट्ठि जहिं कहिं वि राही ।
को सक्कइ सवरेवि डड्ढ–णयण णेहे पलोट्टउ ॥
स्वयंभूच्छंदे ४।२३

एकैकं अङ्गं यथा स्यादेवं हरि नारायणं यद्यपि सुष्ठु सर्वादरेण 'राही' राधा 'जोएदि' विलोकयति, तथाऽपि 'दड्ढनयणा नेहित्ति' दृढद्रष्टिरागस्नेहेन यस्मिन्नङ्गप्रदेशे कस्मिन्नङ्गप्रदेशे स्थापितां सती दृष्टि संवरीतुं कः शक्नोति समर्थो भवति ।। १२२ ।।

४२२ विहवे कस्सु थिरत्तणउ, जोव्वणि कस्सु मरट्टु ।
सो लेखडउ पट्ठाविअइ, जो लग्गइ निच्चट्टु ।। १२३ ।।

विभवे द्रव्ये सति कस्य स्थिरत्वं भवति, यौवने कस्य 'मरट्टु' अहंकारो भवति । तथापि स एव लेखः प्रेष्यते यो 'निच्चट्टु' गाढं अत्यर्थं लगति ।। १२३ ।।

४२२ कहिं ससहरु कहिं मयरहरु, कहि बरिहिणु कहि मेहु ।
दूर-ठिआह वि सज्जणहं, होइ असड्ढलु नेहु ।।१२४।।[1]

'कहि' क्व ससहरु-शशधरश्चन्द्रः, क्व मकरधरः समुद्रः, क्व बर्हिः मयूरः क्व मेघः, दूरस्थितानामपि सज्जनानां असड्ढलु-असाधारणो निरुपम. स्नेहो भवति ।। १२४ ।।

४२२ कुंजरु अन्नहं तरुअरहं, कोड्डेण घल्लइ हत्थु ।
मणु पुणु एक्कहिं सल्लइहिं, जइ पुच्छह परमत्थु ।।१२५।।

कुञ्जरोऽन्येषु तरुवरेषु कौतुकेन हस्तं क्षिपति, मनः पुनरेकस्यां सल्लक्याम्' यदि पृच्छत परमार्थमित्यर्थः ।१२५।

१. गयणट्ठिओ वि चन्दो आसासइ कुमुय-सण्डाइ ।

वज्जालग्गे ७७

दूरट्ठिओ वि चन्दो सुणिव्वुइ कुणइ कुमुयाण ।

वज्जालग्गे ७८

कत्तो उग्गमइ रवी, कत्तो वियसन्ति पङ्कय-वयणाइं ।
सुयणाण जत्थ नेहो, न चलइ दूरट्ठियाण पि ।।

वज्जालग्गे ८०

४२२ खेड्डयं कयमम्हेहिं, निच्छय कि पयम्पह ।
अणुरत्ताउ भत्ताउ, अम्हे मा चय सामिअ ।। १२६ ।।

अस्माभिर्निश्चयं क्रोडा कृता. किं प्रजल्पत ? ( हे स्वामिन् ! )अनुरक्तान् भक्तानस्मान्मा त्यज ।। १२६ ।।

४२२ सरिहिं सरेहि न सरवरेहिं, नवि उज्जाण-वणेहि ।
देस रवण्णा होन्ति वढ, निवसन्तेहि सुअणेहि ।।१२७।।[1]

सरिद्भिर्नदीभिः सरोभिः सरोवरैर्महत्सरोभिर्नाप्युद्यानवनैः देशा रम्याः । हे 'वढ' मूर्ख ! निवसद्भिः स्वजनैर्देशा रम्या भवन्तीत्यर्थः ।। १२७ ।।

४२२ हिअडा पइ एहु बोल्लिअउ, महु अग्गइ सय-वार ।
फुट्टिसु पिए पवसन्ति हउ, भडय ढक्करि-सार ।।१२८।।

हे हृदय ! त्वया ममाग्रे शतवारं यथा स्यात्तथा तत्प्रोक्तम्, प्रवसता प्रवास कुर्वता प्रियेण ( सता ) अहं स्फुटिष्यामि, हे 'भण्डय' ! निर्लज्ज ! हे ढक्करिसार ! हे हृतबल ! ।। १२८ ।।

हेल्लि म झंखहि आलु० व्याख्या पूर्ववत् ।।

४२२ एक्क कुडुल्ली पर्चाहि रुद्धी,
तहं तह पञ्चहं वि जुअंजुअ बुद्धी ।
बहिणुए तं घरु कहि किव नन्दउ,
जेत्थु कुडुम्बउ अप्पण–छन्दउ ।। १२९ ।।

एका कुटी शरीरं पञ्चभिरिन्द्रियै रुद्धा, तेषां पञ्चानां पृथक् पृथग् बुद्धिः । हे भगिनि ! कथय तद्गृह कथं नन्दतु, यत्र कुटुम्बमात्मछन्दकमित्यर्थः (स्वच्छन्दम्) ।।१२९।।

---

१. नयर न होइ अट्टालएहिं, पायार-तुङ्ग-सिहरेहिं ।
गामो वि होइ नयर, जत्थ छइल्लो जणो वसइ ।।
वज्जालग्गे २७०

४२२ जो पुणु मणि जि खसफसिहूअउ
चिन्तइ देइ न दम्मु न रूअउ ।
रइ-वस-भमिरु करग्गुल्लालिउ
घरहि जि कोन्तु गुणइ सो नालिउ ।।१३०।।

यः पुनर्मनस्येव 'खसफसिहूअउ' व्याकुलीभूतस्सन् चिन्तयति, द्रम्मं न ददाति न रूपकम् । स मूढो रतिवशेन भ्रमणशीलः सन् कराग्रोल्लालितं कुन्तं भल्लं गृहे एव गुणयति चालयतीत्यर्थः ।। १३० ।।

दिवेहि विढत्तउं खाहि वढ० । नवखी कवि विस गण्ठि० । व्याख्या पूर्ववत् ।।

४२२ चलेहि चलन्तेहि लोअणेहि, जे तइ दिट्ठा बालि ।
तहिं मयरद्धय-दडवडउ, पडइ अपूरइ कालि ।।१३१।।

हे बालिके ! त्वया चलैश्चपलैश्चलमानैर्लोचनैर्ये नरा दृष्टाः, तेषां नराणां 'मयरद्धय' मकरध्वजस्य दडवड-अवस्कंदं कटक धाटी अपूर्णे काले पततीत्यर्थः ।।१३१।।

छुडु अग्घइ ववसाउ० पूर्ववत् ।।

४२२ गयउ सु केसरि पिअहु जलु, निच्चिन्तइ हरिणाइं ।
जसु केरएं हुकारडए, मुहहु पडन्ति तृणाइं ।। १३१ ।।

स केसरी सिंहो गतः, हे हरिणाः ! यूयं निश्चिन्तास्सन्तो जलं पिबत, यस्य सम्बन्धिना हुंकारेण युष्माकं मुखेभ्यस्तृणानि पतन्तीत्यर्थः ।।१३२।।

अह भग्गा अम्हहं तणा । व्याख्या पूर्ववत् ।।

४२२ सत्थावत्थहं आलवणु, साहुवि लोउ करेइ ।
आदन्नहं मब्भीसडी, जो सज्जणु सो देइ ।।१३३।।

स्वस्थावस्थाना सुखिनां पुरुषाणां आलपन सर्वोऽपि लोक: करोति, परं आर्त्तानां नराणां 'मा भैषी:' इति य आश्वासनं ददाति स सज्जन इत्यर्थ: ।। १३३ ।।

४२२ जइ रच्चसि जाइट्ठिअए, हिअडा मुद्ध-सहाव ।
लोहे फुट्टणएण जिवं, घणा सहेसइ ताव ।।१३४।।

हे हृदय ! मुग्धस्वभाव ! यद्यद्दृष्टं तत्र तत्र यदि रक्तीभवसि, तदा प्रचुराणि दुःखानि तव भविष्यन्ति । यथा-स्फुटकेन स्फुटता द्विखण्डीभवता एवंविधेन लोहेन घनस्ताप: सह्यते ।।१३४।।

४२३ मइ जाणिउ वुड्डीसु हउं, प्रेम द्रहि हुहुरुत्ति ।
नवरि अचिन्तय संपडिय, विप्पिय नाव झडत्ति ।।१३५।।

मया ज्ञातम्-अह प्रेमद्रहे बुडिष्यामि, कथं 'हुहुरु' इति शब्दानुकरण कृत्वा, नवरं केवलं मया विप्रियनौ: ( भाषायाम् वियोगबेडा[1]) अचिन्तिता झटिति सपतिता-प्राप्तेत्यर्थ: ।।१३५।।

४२३ खज्जइ नउ कसरक्केहिं, पिज्जइ नउ घुण्टेहिं ।
एम्वइ होइ सुहच्छडी, पिएं दिट्ठे नयणेहि ।।१३६।।

कसरकै: प्रियो न खाद्यते, घुण्टकैर्न तु पीयते, 'एम्वइ' इत्थंभूतेऽपि नयनै: लोचनै दृष्टेन प्रियेण सुखाशा भवतीत्यर्थ: ।।१३६।।

४२३ अज्जवि नाहु महुज्जि घरि, सिद्धत्था वन्देइ ।
ताउजि विरहु गवक्खेहिं, मक्कड-घुग्घिउ देइ ।।१३७।।

अद्यापि 'जि' एवार्थे नाथो ममैव गृहे सिद्धार्थान् सर्षपान् वन्दते, कथंचिचलितुकामोऽस्ति, तावदेव 'गवक्खेहिं'

१. नावा इत्यर्थ. ।

(गवाक्षेषु) विलोकनैः विरहो मर्कटवत् 'घुग्घिउ' चापल्यं दत्ते। एतावता गवाक्षेषु मटर्कचेष्टां ददातीत्यर्थः ॥१३७॥

४२३ सिरि जर-खण्डी लोअडि, गलि मणिअडा न वीस।
तोवि गोट्ठडा कराविआ, मुद्धए उट्ठ-बईस ॥१३८॥

शीर्षे 'जरखण्डी' जीर्णा 'लोअडी' लोमपटी कम्बलिका परिधानेऽस्ति। कण्ठे मणिकाः विंशत्यनुमिता न सन्ति, 'तोवि' तथापि मुग्धया गोष्ठकाः गोष्ठपुरुषा गोपालाः गोष्ठ गोकुल यत्र तिष्ठंति इति गोष्ठाः 'तात्स्थ्यात् तद्व्यपदेश' इति न्यायाद् गोष्ठस्थाः पुरुषा. उत्थानोपवेशन चेष्टानुकरण कारिता ॥१३८॥

४२४ अम्मडि पच्छायावडा, पिउ कलहिअउ विआलि।
घइं विवरीरी बुद्धडी, होइ विणासहो कालि ॥१३९॥

हे अम्ब ! पश्चात्तापो वर्त्तते, विकाले सध्यायां प्रियः कलहापित (कलहितः) कलहयुक्तों विहितः। विनाशस्य-काले विपरीता बुद्धिभवतीत्यथ. ॥१३९॥

४२५ ढोल्ला एह परिहासडो, अइभन कवणहिं देसि।
हउ झिज्जउं तउ केहिं पिअ, तुहु पुणु अन्नहि रेसि ॥१४०॥

हे नायक ! एषा परिभाषा रीतिः 'अइभन' अत्यद्भूता (कस्मिन् देशे) वर्त्तते इति शेष.। हे प्रिये ! अह तवकृते क्षयं प्राप्नोमि, त्वं पुनरन्यस्यार्थे क्षीयसे इत्यर्थः ॥१४०॥

वड्डत्तणहो तणेण। व्याख्या० पूर्ववत्।

४२६ सुमरिज्जइ त वल्लहउं, ज वोसरइ मणाउं।
जहिं पुणु सुमरणु जाउं गउ, तहो नेहहो कइं नाउ ॥१४१॥

सवल्लभः स्मर्यते, यो वल्लभो विस्मरति मनाक् स्वल्पमपि स्त्रिया। 'जाउ' यदि स्मरण अह गतः, तस्य

